## तृतीयः सर्गः

संसारक्लेशहा ध्वस्तकंसादिदम्भसम्भवः ।
अंसासक्तधनू रामस्ताड़कावनमाविशत् ॥ १ ॥

इतस्ततस्तामवलोक्य ताड़कां
क्षणेन बाणाशनिभिन्नवक्षसम् ।
विधाय तिष्ठन्तमुदग्र[1] तेजसं
सकौशिकं सानुजमीडिरे सुराः ॥ २ ॥

### सप्तमः प्रबन्धः

### गुर्जरीरागेण गीयते

यामिमां विकटां विलोक्य युतां सदा तनयेन ।
तापसाः सभयाः जहुः सदनानि यातनयेन[2] ॥
रघुवर हतेयमहिता त्वया सा कुपितेन ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

तापसाश्रमतापदा मुनिशापदानवशेन ।
राक्षसीतनुलक्षितापि न विक्षता त्रिदशेन ॥ २ ॥

स्फूर्जथूत्कटगर्विताम्दुद्‌तर्जनाकलितानि[3] ।
यद्ध्वनेर्धृतसाध्वसै सुमनोऽध्वगैर्न गतानि ॥ ३ ॥

या चलच्छिखर[4] भ्रमाद्दलघातिनातिवलेन ।
ताड़ितापि न कम्पते[5] पावना भृशं विफलेन ॥ ४ ॥

---

1. (ख) सुदग्र ।
2. (ख) यातनयेन ।
3. (क) तर्जकात्कलितानि ।
   (ख) तर्जनावतलितानि ।
4. (ख) शिखरि ।
5. (ख) कम्पते ।

यादृशं वत भूतमद्भुतमुच्छ्रितं विधिसृष्टम्[1] ।
भूतले न रसातले दिवि न श्रुतं न च दृष्टम् ॥ ५ ॥

गाधिजाद्गुरुताधिकादवधारयाश्रमवार्य्यम् ।
साधयासुरबाधया हृततेजसां[2] गुरुकार्य्यम् ॥ ६ ॥

स्वीकृतं परिपालयाशु निभालयामरराजम् ।
ताड़कावधदीर्घसम्मदतावकस्तवभाजम् ॥ ७ ॥

पावनं शितिकण्ठकल्पितराघवोज्वलगीतम् ।
द्रागिदं बहुकामदं तव जायतां श्रुतिपीतम् ॥ ८ ॥

हृत[3]गुरुभयं हृद्यं दृष्ट्[4] हिताहितमाहितं
हरिहयमुखा हर्षाद्रामं प्रपूज्य दिमं जग्मुः ।
मुनिरपि यथावस्त्राग्रामं[5] सजृम्भकमादरा
द्रघुपरिवृढे न्यस्य स्वस्याश्रमं बिगतश्रमः ॥ ३ ॥

पाणौ सायकमेकतस्तदितरे चापं गुणाढ्यं दधद्
दुर्गा[6]लोकनकौतुकी मलयजेनासेवितः पृष्ठतः ।
रत्याढ्यः सुहृदानुजेन शुचिना युक्तः पुरस्थद्विजो[7]
रामः काम इवेषुणा कलयितुं भीमं सुबाहुं ययौ ॥ ४ ॥

भूसौन्दर्य्यधरं धनुर्दधदयं किं दर्पको मूर्त्तिमान्
किं वा वामन एष आश्रमपदं स्वीयं प्रविष्टः पुनः ।
इत्यानन्दरसोद्धुराः मुनिवराः रामं विलोक्यादरा—
द्दूरादेत्य सगाधिजानुजमजं संपूज्य निन्युः पदम् ॥ ५ ॥

---

1. (क) विधुसृष्टं तम् ।
2. (ख) दृततेजसां ।
3. (क) हत ।
4. (ख) दृष्टं ।
5. (ख) यथावस्त्रग्रामं ।
6. (ख) गुर्गा ।
7. (ख) पुरस्साद्विजो ।

तान्यासाद्य गृहाणि गाधिजनुषो रामस्तदा मौनिनः
षड्रात्रीः शरचापपाणिरवसत्तद्विघ्नहत्यै ततः ।
मारीचं हृदि मानवास्त्रकलितं क्षिप्तं तदा वारिधौ[1]
त्वाग्नेयेन पुनः सुबाहुमदहद्वायव्यतोऽन्यानपि ॥ ६ ॥

भ्रूक्षेप[2]भिन्नरिपुणा सह राघवेण
सर्वैः समेतमुनिभिश्च स गाधिसूनुः[3] ।
शोणतीरकथिताद्भुततथ्यवाक्यः
पथ्यर्चितः प्रमतिना मिथिलां जगाम ॥ ७ ॥

इति शितिकण्ठकृतौ श्रीगीतसीतावल्लभे महाकाव्ये ताड़कादिवधो
नाम तृतीयः सर्गः

1. (क) क्षिप्ता तदे वारिधे ।
2. (क) भृक्षेप ।
3. (ख) गाधिसवगू मु ।

# चतुर्थः सर्गः

अथ रामपदाम्भोजधूलिनिर्धूतकल्मषा ।
अहल्यानन्दसन्दोहसस्मिता[1] प्राह राघवम् ॥ १ ॥

## अष्टमः प्रबन्धः

### कर्णाटरागेण गीयते

विन्दति चन्दनविन्दुरतुलरुचिसुन्दरमन्दिर[2]भाले ।
तव करुणामृतसागरपरिलसदिन्दुतुलां सुविशाले ॥
सा सदये त्वयि पूता ।
राघवपरमहमिह[3] दुरितार्णववीचिचयैरवधूता ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

गण्डविलम्बिशिखण्डकमण्डलमण्डितमास्यमुपास्यम् ।
इदमलिकुलकलितं नलिनं तव तुलयति यस्य न दास्यम् ॥ २ ॥

स्वान्तलसत्करुणार्णवसमुदितवीचिचयप्रतिबिम्बम् ।
विपुलमुरस्तव नवजलदोज्वल कलयति शुचिरुचिर्बिम्बम् ॥ ३ ॥

उन्नतमप्यतिसारमलघुगुणनम्रमिमं नवचापम् ।
स्वसदृशमतिगुरुवंशजमश्नसि करकमलेन दुरापम्[4] ॥ ४ ॥

शीकरपल्लवमुल्लसदविरतलोहितरुचिरणलोलम् ।
कलयति रुचिरविचित्रमिदं तव मृदुलखरं शरजालम् ॥ ५ ॥

---

1. (ख) मस्मिता ।
2. (ख) मन्दिरशब्दस्योल्लेखो नास्ति ।
3. (क) मिव ।
4. (ख) चतुर्थपदस्योल्लेखो नास्ति ।

त्वत्पदि भाति रजोगुण इत्यपि विन्दति हृङ्मम शङ्काम् ।
चरणरजस्तव सृजति वधूमपि यदुपलतोऽप्यकलङ्काम् ॥ ६ ॥

सुरुचिरपल्लवरुचिमपि वाञ्छतु तव नवपल्लवसंज्ञम् ।
पद्ममिति स्फुटनाम दधाति किमम्बुदमल्पमसंज्ञम् ॥ ७ ॥

श्रीशितिकण्ठभणितमतिमधुरं सततमिदं श्रवणीयम् ।
रघुपतिपावितगौतममुनिरमणीवचनं रमणीयम् ॥ ८ ॥

आवासोपलमतगौतमवधूमुद्धृत्य धून्यादृदो
न्यस्तं मैथिलमन्दिरे शिवधनुर्द्रष्टुं विवृद्धस्पृहम् ।
श्रीरामं मिथिलेश्वरो[1] विरचितातिथ्यः[2]स कौतूहला-
दावेद्यागमनप्रयोजनमदः पृष्टोऽवदत्कौशिकः ॥ २ ॥

## नवमः प्रबन्धः

### देशाख्यरागेण गीयते

निशिथविशिखहतताड़कमेतम् ।
सारमहोरुचिनिचयनिकेतम् ।
राघवं स्वधनुर्नृप दर्शय ॥ ध्रुवपदमिदम् ॥ १ ॥

अनुदितबलमपि[3] मृदुलसुबाहुम् ।
नातिकलितशरदलितसुबाहुम् ॥ २ ॥

निखिलभुवनपरिपालनदक्षम् ।
शिशुतनुधरमपि कृतमखरक्षम् ॥ ३ ॥

---

1. (क) मिथिलेश्वरे ।
2. (क) विरचितातिथि ।
3. (ख) बलमनु ।

अगणितगुणमपि गुणरसवन्तम् ।
अबहुगुणं धनुरपि कलयन्तम् ॥ ४ ॥

यत्पदधूलिविगलदघशल्या ।
भूप वहति[1] निजरूपमहल्या ॥ ५ ॥

इममपि बिरमिह कलय जगत्याम् ।
मम गिरमपि हृदि भावय सत्याम् ॥ ६ ॥

लक्ष्मणमिममपि रामकनिष्ठम् ।
कलय करोज्वलकार्मुकनिष्ठम् ॥ ७ ॥

श्रीशितिकण्ठभणितमिति चित्रम् ।
दुरितचयं द्यतु रामचरित्रम् ॥ ८ ॥

सारः सर्वधनुष्मतामयमिहानीतो मया सानुजः
श्रीरामः कुतुकेन खण्डपरशोर्द्रष्टुं धनुर्वाञ्छति ।
तत्तूर्णं तदिहानयेति स तदाकर्ण्यात्मकर्णामृतं[2]
विश्वामित्रवचो मनोरथफलं मेने करस्थं नृपः ॥ ३ ॥

स्मराभिरामं स निरीक्ष्य रामं कामं सभायां विनिवेद्य कामम् ।
समानयद्दाशरथेः समीपं चापं दुरापं कृतवीरतापम् ॥ ४ ॥

कन्दर्पाहितकार्मुकं निजकरेणोद्धृत्य कौतूहला-
त्तद्द्राघ्र्यमवार्य्यवीर्य्यमहिमा साश्चर्य्यमापूर्य सः ।
निर्घातोच्चयदैर्घ्यभृद्ध्वनिभरस्तब्धीभवत्क्ष्मातलं
ज्याकृष्ट्येव[3] बभञ्ज सार्धमखिलं क्षोणीभुजामोजसा ॥ ५ ॥

क्षणमथ कलयन् क्षितीक्षणोऽक्षिद्वयमयमाशु वितर्क्य यस्य कर्म[4] ।
ज्वलितमपि भृशं स्ववीरतेजः शममनयन्महता त्रपारसेन ॥ ६ ॥

इति शितिकण्ठकविकृतौ श्रीगीतसीतावल्लभे महाकाव्ये धनुर्भङ्गो
नाम चतुर्थः सर्गः ।

---

1. (ख) वहसि ।
2. (ख) कर्णासृतं ।
3. (क) ज्याकृष्टेव ।
4. (क) माशु वितर्कयन्नुदकम् ।

# पञ्चमः सर्गः

अहनि सह तदैव वेगवद्भिर्नृपतिचरेषु हयैर्गतेष्वयोध्याम् ।
अथ जनकसुतां धृतानुतापां वड़भिगवाक्षगतां सखीत्युवाच ।। १ ।।

## दशमः प्रबन्धः

### देशवराड़ीरागेण गीयते

मिलति रघुकुलहीरे सहमुनितिलकेन ।
कलितधनुषि रुचिरे मुदमिह विदधति केन ।।
कथमधुनाप्यतिमुग्धा सखि सीदसि ।।

।। ध्रुवपदमिदम् ।।

गिरिशधनुषि विभिन्ने दशरथतनयेन ।
पतति मनुजनिवहे ध्वनिभरजनितभयेन ।। २ ।।

पतति कुसुमसमूहे दिव उदितरसेन ।
धृतगुरुमुदि जनके मुनिवरकलितहसेन ।। ३ ।।

विचलति[1] नृपसमूहे पुर[2]मरसमुखेन ।
नदति मुरजनिवहे रघुवरकलितसुखेन[3] ।। ४ ।।

भणति कविशितिकण्ठे रघुपतिरुचितेन ।
मनसि सपदि विशदे निवसतु निजचरितेन ।। ५ ।।

पूर्वं तादृशदारुणः पितृपणः क्षोणी[4]धराकर्षण-
श्छिन्तां कुन्त इवाततान महतीं हन्तातिसन्तापदः ।
सोऽयं ते फलदो नवीनजलदोद्योतेन केनापि तद्
भग्नं शैवधनुस्तदाधिरघुना सीते परित्यज्यताम् ।। २ ।।

---

1. (ख) विचलित ।
2. (ख) मुर ।
3. (ग) रघुवरे कलितसखेन ।
4. (ख) क्षोणी ।

## एकादशः प्रबन्धः

### गुर्जरीरागेण[1] गीयते

त्यज सखि खेदं हृदि कलयेदं मम वचनं धृतहर्षम् ।
मृदुगतिकान्तं रचय नितान्तं सदसि सुधारसवर्षम् ॥
धीरमुदारं जगतीसारं वरय वरं रघुवीरम् ।
श्यामलकोमलकान्तिमनोहरमूर्त्तितिरस्कृतमारम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

कृतगुरुयत्नां धृतबहुरत्नां[2] विलसितमौक्तिकजालाम्[3] ।
सत्त्वतरङ्गां बलवदनङ्गां कलय गले मणिमालाम् ॥ २ ॥

कलितविभागं वपुषि सरागं स्वीकुरु कुङ्कुमरागम् ।
त्वत्पदि रक्ते सततमलक्ते बह सखि परमनुरागम् ॥ ३ ॥

इयमपि काञ्ची रचयतु काञ्चिद्रुचिमिह समुचितदेशे ।
सपदि वयस्यां मण्डनशस्यां[4] संदिश निजशयवेशे ॥ ४ ॥

मणिभिररहितं हंसकसहितं रुचिनिचयैः परिपूर्णम् ।
विलसितहीरं नवमञ्जीरं पदकमले वह तूर्णम् ॥ ५ ॥

कलय सलोलं वपुषि विनीलं विमलमिदं मृदुचेलम् ।
हाटककेतकमधुपकदम्बकमरतविनिन्दितचेलम् ॥ ६ ॥

रुचिजितकमले वह करकमले नवरुचिर[5]वरणमालाम् ।
किशलय[6]कलितामिव[7]कुरु ललितां राममुदे सुविशालाम् ॥ ७ ॥

---

1. (ख) गुर्जरीरागः ।
2. (क) बहुरत्नं ।
3. (क) जालं ।
4. (ख) मण्डनसरस्यां ।
5. (क) नवरुचि ।
6. (क) किसलय ।
7. (ख) कलितामिह ।

इति शितिकण्ठे श्रितशितिकण्ठे भणति मनोहरगीतम् ।
नवघनवामं चेतसि रामं स्मरत[1] सदैव सखीतम् ॥ ८ ॥

विकिर हृदयात्क्षोभं शोभां तनोः सुमनोभरैः
कलय रुचिमाकल्पैरल्पेतरै रचयाधुना ।
प्रणयलहरीं साक्षाल्लक्ष्यां यथावरणस्रजं
सखि चिरधृतोत्कण्ठे प्रियस्य समर्पय ॥ ३ ॥

त्वद्बाष्पेण समं जगाम मरुतां चिन्तोदधिस्ते पितु-
स्तत्कल्याणि हृताधिशल्यहृदये हेतुर्विलम्बेऽस्तु कः ।
इत्याकर्ण्य सखीवचो जनकजा गत्या श्रिया मालया
मार्गं राजसभां गतं रघुपतेः सा भूषिताभूषयत् ॥ ४ ॥

आश्लिष्याथ समागतं[2]दशरथं सामात्यपुत्रानुगं
पृष्ट्वानामय[3]मादरेण रचतातिथ्यस्तदा मैथिलः ।
श्रीरामाय सलक्ष्मणाय विधिना सीतामदात्सोर्मिलां
संयोज्य श्रुतकीर्त्तिमाशु भरते शत्रुघ्नतो माण्डवीम् ॥ ५ ॥

सभयरुचिरं निष्पीड्यान्तर्निजैः करपङ्कजैः
निजनिजवधूपाणीन् प्रापुर्मुदं हृदि राघवाः ।
अथ दशरथोदारोदारैः सुतैः कृतमङ्गलैः
सहसाहरणै[4]र्यानारूढैर्ययौ समहामहाः ॥ ६ ॥

इति शितिकण्ठकविकृतौ श्रीगीतसीतावल्लभे महाकाव्ये सीतापरिणयो नाम पञ्चमः सर्गः ।

---

1. (क) स्मरति ।
2. (ख) समागत ।
3. (क) पृष्टानमय ।
4. (ख) सहरिणै ।

# षष्ठः सर्गः

अथ तं रुचिरकलापं धृतवरचापं वहन् मनस्तापम् ।
रामिमदं पथि रामः परशुधरः कोपित प्राह ॥ १ ॥

## द्वादशः प्रबन्धः

### गुण्डकिरीरागेण गीयते

शाम्भवधनुरिति दलितमसारम् ।
वहसि मनसि बत मानमपारम् ॥
एतदरे राघव पूरय धन्व हरेः ॥ ध्रुवपदमिदम् ॥ १ ॥

क्षत्रियलग्नकुलिशादपि मत्तः ।
पृथुक[1] विभेषि न किमसि विमत्तः ॥ २ ॥

नृपचयलोहितलोहितधारः ।
मम किमु न श्रुत एष कुठारः ॥ ३ ॥

भूधरभेदिनि मयि भुवि वीरः ।
त्वमसि मतो रघुवंशकरीरः[2] ॥ ४ ॥

वीक्षणमपि तव नृपवधकरुणाम् ।
दलयति कलयति रुषमपि तरुणाम्[3] ॥ ५ ॥

जनकसुता तव राम विरामम् ।
पश्यतु रतिरिव मृड़हतकामम् ॥ ६ ॥

---

1. (ख) पृथग् ।
2. (ख) रघुवंशकर :
3. (क) करुणां ।
   (ख) नरुणं ।

अत्रप[1]कलयसि यदि मम नाम ।
निजमचिरादिह दर्शय धाम ॥ ७ ॥

श्रीशितिकण्ठकवेरतिमधुरम् ।
गदितमिदं द्यतु पातकनिकरम् ॥ ८ ॥

विपुलमिदममोघं धन्व धुन्वन्मुरारेः
दशरथसुत शीघ्रं दर्शय स्वीयमोजः ।
सकलबलसमेतं दृष्टकर्मा भवन्तं
तदनु मनुजकीट द्वन्द्वयुद्धे दहेयम् ॥ २ ॥

अङ्गेषु व्यथमान एभिरधिकं श्रीराघवो वाक्शरै-
रादायारिकराद्धनुर्नरहरेस्तल्लोलमापूरयत् ।
तल्लोकान्निखिलान्निहत्य स शरेणानीय तेजस्ततः
सानन्दं स्वपुरीमवाप जगतीचन्द्रो महेन्द्रोपमः ॥ ३ ॥

इति शितिकण्ठकविकृतौ श्रीगीतसीतावल्लभे महाकाव्येऽयोध्याप्रदेशो
नाम षष्ठ सर्गः ।

---

1. (क) आत्रप ।

## सप्तमः सर्गः

अत्रान्तरे रघुपतेरभिषेककृत्यं
श्रुत्वाहितं सपदि मन्थरया प्रयुक्ता ।
कैकेयी[1] संस्कृततनो[2]र्मनुजाधिपस्य
खेदाय सा क्षितितले शयनं चकार ॥ १ ॥

प्रविशति सरुष कलत्रे भुवमपि गात्रेण रोचिषां पात्रे ।
दशरथनृपतिः सभयं पटुचाटुवचनं प्रियामाह ॥ २ ॥

### त्रयोदशः प्रबन्धः

मालवरागेण गीयते

अहह नवनीतमृदुमृदुलशयनोचितम् ।
वपुरमितधूलिचितममलमुखं नोचितम्[3] ॥
भूतले किमिह शयनं प्रिये वद सपदि चिन्तितम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

चपलमयि चण्डि मृदुवचनमतिशीतम् ।
रचय चिरममृतमपि यातु जगतीतलम् ॥ २ ॥

नयनविशिखेन हर मदनशरमन्ततः ।
हसितसुधयापि कुरु लेपमसमं ततः ॥ ३ ॥

भवदतुलपदतलवहनगरुपर्वतः ।
हस दिवमिन्दुमुखि भूमिरपि सर्वतः ॥ ४ ॥

---

1. (ख) कैकेय्य ।
2. (क,ख) संस्कृततनु ।
3. (ख) नोदितं ।

अधिवसतु वेश्म कमलाद्य कतमस्य ते ।
त्यजतु वचसापि[1] वद कस्य विमतस्यते ॥ ५ ॥

वसुसदनमेतु बत कस्य रजनीश्वरः ।
भजतु तन्ममाशु[2] वद कस्य स जनीश्वरः ॥ ६ ॥

त्वदभिमतमाशु वद यदपि मदप्रियम् ।
तदपि करवाणि मम सत्यमधिकप्रियम् ॥ ७ ॥

सरसशितिकण्ठकविरुचिरवचनादृतम् ।
हरतु भवभीतिमिदमनिशभजनादृतम् ॥ ८ ॥

तत्किं पीडयसि प्रियं प्रियतमे यच्चिन्तितं तद्वदे-
त्युक्ता साह वरद्वयं वितर मे न्यस्तं पुरा यत्त्वयि ।
भूभर्त्ता भरतोऽस्तु गच्छतु पुरा द्यौव रामो वनं
पीत्वा वाक्यमिषाद्विषाणि सहसा भेजे विषादं नृपः ॥ ३ ॥

अथागतं राघवमिन्दुवक्त्रं सुमन्त्रयुक्तं प्रसमीक्ष्य हर्षात् ।
नृपं च मोहार्णवमध्यमग्नं कैकेयी तं[3] निष्ठुरवागुवाच ॥ ४ ॥

## चतुर्दशः प्रबन्धः

### वसन्तरागेण गीयते

गुरुवचनादरधृतगुरुहर्षः । गुरुजनवत्सलविगलदहर्षः ।
राम, वनमधुना, प्रविश विलसतु तदिद[4]मधुना ॥
॥ ध्रुवपदमिदम् ॥ १ ।

---

1. (क) बत सापि ।
2. (क) तनुमाशु ।
3. (ख) कर्कश्यलं ।
4. (ख) तदिव ।

इह भरतो मम भजतु नृपत्वम् । ऋत[1]वचनं गुरुमवसकृपत्वम् ॥ २ ॥
सदय न पीड़य गुरुमविगीतम् । विततयशोहर वितथविभीतम् ॥ ३ ॥
बहुगुणभूपतिरतिकटुवचनम् । गदितुमलं खलु नाप्रियवचनम् ॥ ४ ॥
गमनविलम्बनसमुदितशङ्कम् । इतरमिवोद्धर पितरमपङ्कम् ॥ ५ ॥
अपि भवदानन[2]वीक्षणसज्जम् । नयनयुगं मुकुलयति सलज्जम् ॥ ६ ॥
श्वश्रूरिति तव धार्मिकधात्री । कथय कथं रतिमहह विधात्री ॥ ७ ॥
इति शितिकण्ठकवेरतमधुरम् । द्युतु गदितं भवभीमतिमधुरम्[3] ॥ ८ ॥

विरम राम नृपत्वरसाद्वनं
विश विशांपतिमाशु विशोधय ।
गिरमिमामभिनन्द्य सनिन्दितां[4]
स्वजननीगृहमेत्य जगाद ताम् ॥ ५ ॥

## पञ्चदशः प्रबन्धः

### गुर्जरीरागेण गीयते

गुरुपदविनत प्रमुदितजनत तापस[5]जनसेवितम् ।
सुरपुररुचिरादविदितमचिरात्फलदलधृतजीवितम् ॥
प्रविशामि पुराज्जननि वनं विधिना धृताधिरधुना ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

---

1. (क) रुत ।
2. (ख) अपिमवदान ।
3. (क) भवभीगरिमधुरं ।
4. (ख) मनिन्दितां ।
5. (ख) स्तापस ।

न भरतजननी मदशुभजननी या सुतशिवमीक्षते ।
हृदपि कठैव पितुरपि दैवं कारणमिह लक्ष्यते ॥ २ ॥

नरपतिविरतो[1] भवतु स भरतो भूपतिरपि भावितम् ।
कटुतररचनं[2] त्वदहितवचनं कृन्तति मम जीवितम् ॥ ३ ॥

ज्वलदवशिखिनं नृपतिमसुखिनं मा वद मयि दूरगे ।
अतितरपरुषां गिरमुदितरुषा धार्मिकधुरिपारगे ॥ ४ ॥

वसुरसवर्षावधि[3]गतहर्षा चिन्तय मम मङ्गलम् ।
विरचय देवाधिक[4]गुरुसेवा मा हर नयनाज्जलम् ॥ ५ ॥

पुनरपि गहनात्कृतसुखदहनादागतमिह मां भृशम् ।
नतमतिर्धारैर्नयनजलधारैः सपदि सेचयाकृशम् ॥ ६ ॥

सकृदपि भरते नृपपदनिरते विरसय नहि मानसम् ।
कथमपि रचयेस्तदनुगनिचयेऽप्यादरिवचसा रसम् ॥ ७ ॥

इति शितिकण्ठेरितमुपकण्ठे सज्जनमनसां पदम् ।
रचयतु सततं हरतु च विततं पातकमतितापदम्[5] ॥ ८ ॥

नायासं सतताश्रुजं समगमस्त्वं मत्कृते वाक्शरैः
मातः कातरमात्तमन्तिकगता नातं न सन्तापये ।
इत्याश्वास्य मुहुः प्रणम्य तदुदिताशीर्वादपाथेयभृत
गीर्वाणेशरुचिः स्मिताञ्चितमुखः स त मुपेत्याह सः ॥ ६ ॥

---

1. (ख) नरपतिवरगो ।
2. (ख) वचनं ।
3. (क) विधि ।
4. (ख) देवाधिप ।
5. (ख) पुस्तकस्य पाठोऽत्रैव समाप्तः ।

## षोड़शः प्रबन्धः

### गुर्जरीरागेण गीयते

परिहृतसमुदयविपुलसुखेन ।
सुखरहितं वत मयि विमुखेन ।
अयि यामि वनं विधिना प्रिये ॥
॥ ध्रुवपदमिदम् ॥

भरतनिहितजगदखिलरसेन ।
स्फुरदहितं कृतं मदरिहसेन ॥ २ ॥

दलितगुरुहृदयगुरुकरुणेन ।
भयकलितं हृतवरशरणेन ॥ ३ ॥

भवदतिरसभरहरणचणेन ।
अहिकलितं हृत मदुरुगुणेन ॥ ४ ॥

अनुचितविधिकृतिरतिनिरतेन ।
दुरधिगमं हृत मदभिमतेन ॥ ५ ॥

क्षणविपटितपटुतरघटितेन ।
गिरिविषमं हृतकरकलितेन ॥ ६ ॥

अनवसरविलसदभिलषितेन ।
विरलपथं निरुपमचरितेन ॥ ७ ॥

श्रीशितिकण्ठभणितमचिरेण ।
अवतु भृशं[1] जगदघनिकरेण ॥ ८ ॥

मनोवचोगोचरमङ्गजन्मनो
जनोद्यमं हन्ति चरित्रमङ्गने ।
स्नाभिषेको मम लोचनाम्बुभिः
स्तनाभिषेकोऽस्तु तवाध्वगे मयि ॥ ७ ॥

---

1. (क) भृतं ।

रिपुसमविषेश्चेष्टां नेष्टां निशम्य तथाविधां
विलसदटवीयातोत्कण्ठां प्रियामपि वारिताम् ।
अथ स विपिनं नेतुं जेतुं रिपूनपि लक्ष्मणं
कलितकरुणापाङ्गे नाङ्गा चकार च कामदः । ८ ॥

बाधां विहाय मनसो दयितानुजाभ्यां
दत्वा धनानि पितृसद्म समेत्य पद्भ्याम् ।
स्वीकृत्य चिर¹मगमद्गुहपूजितोऽयं
मार्गे मुनिप्रवरदर्शितचित्रकूटम् ॥ ९ ॥

इति शितिकण्ठकविकृतौ श्रीगीतसीतावल्लभे महाकाव्ये वनोपगमन
नाम सप्तमः सर्गः ।

1. (ग) चीर ।

# अष्टमः सर्गः

अथ पितरि मृते शुचाशु राज्यं
भरत उपेत्य पुरात्स्वमातुलस्य ।
सकलयुतेन इतोऽपि चित्रकूटे
रघुतिलकं कलितोदकं जगाद ॥ १ ॥

## सप्तदशः प्रबन्धः

### भैरवीरागेण गीयते

परिहृतसरसिजवापिकया तुलनां सकरुणं कलयन्ती ।
भवति विपिनमनुयामि पुरी तव न लसति सापि लसन्ती ॥
याहि राघव पाहि गामिह देहि मे मुनिवेशम् ।
तं वह नहि वनसेवनसम्भृतदारुणहृदभिनिवेशम् ॥
॥ ध्रुवपदमिदम् ॥

विदधति मद्विधमग्रभवा नहि साग्रहमुग्रविषादाः ।
सकलजनात्मनि दूरगते त्वयि वर्जितवैदिकवादाः ॥ २ ॥

क्रन्दति निन्दति मम जननीं नहि विन्दति नन्दनतर्षम् ।
नगरजनो न तनोति मनोरथरसमधुना गतहर्षम् ॥ ३ ॥

भवदवलोकन विरहिविलोचन विगलदवारितवर्षम् ।
न दधति पुरपशवोऽपि शवोपम तनुननवो बत शष्पम् ॥ ४ ॥

जितनवनीरद नीरमपीच्छति नैव स कीरवरस्ते ।
गिरमपि धीरतरां न च जल्पति धीरधरे त्वयि शस्ते ॥ ५ ॥

पितृपशिष्टवशिष्ठमुखान् भवदनुनयभाषितनिष्ठान् ।
सफलपथश्रमविपुलसुखान् कुरु धार्मिकधर्मगरिष्ठान् ॥ ६ ॥

मयि करुणाकर कुरु करुणामिह धृतचरणे निजदासे ।
गुरुरसि मंक्षु नियोजय मामपि गुरुरिव काननवासे ॥ ७ ॥

श्रीशितिकण्ठभणितभरतप्रियभाषितमगणिततापम् ।
जनयति कर्णसुखं कवयो हृतकलिभयकलुषकलापम् ॥ ८ ॥

तवेदं नेपथ्यं मयि सदय विन्यस्य नगरं
प्रयाहीति क्रन्दन्नथ स गुरुवाक्यैः स्थिरमतिः ।
कुशोपानद्युग्मं रघुपतिपदात्प्राप्य न गतो
गतो नन्दीग्रामं नियममकरोद्दिप्र[1] भरतः ॥ ९ ॥

इति शितिकण्ठकविकृतौ श्रीगीतसीतावल्लभे महाकाव्ये चित्रकूटे भरतसमागमो नामष्टमः सर्गः ।

1. (क) द्विप्र ।

## नवमः सर्गः

तापसतारणरत्या ललितां रत्याः सहागतां पत्या ।
अनसूया जनकसुतां स्वकलितरागां नतामथ प्राह ॥ १ ॥

### अष्टादशः प्रबन्धः

गुर्जरीरागेण गीयते

सकलजगदभयवितरणनिपुणे ।
अगणितधरणिसुखे विपुलगणे ॥
राघवे रागमूरीकुरु राजसुते ॥
॥ ध्रुवपदमिदम् ॥

तरुणजलजगणरणचरणे ।
विलसदनणुकरुणे निजशरणे ॥ २ ॥

पदतलपतनदलितधरणिभये ।
चलनयनाञ्चलदलहृघनिचये ॥ ३ ॥

तापसभीहृतिकृतवनगमने ।
सनकमुखेडितनिजपदभजने ॥ ४ ॥

जलजकलाकरमदहरवदने ।
अनुचितचीररुचिररुचिसदने ॥ ५ ॥

शतमखमुखसुरसुखघनकाये ।
असुरनिकरहृतिसम्भृतमाये ॥ ६ ॥

जनकतपःफलवितरणमिलिते ।
सततपदाम्बुजनततम[1]कलिते ॥ ७ ॥

---

1. (क) नततम ।

श्रीशितिकण्ठभणितमितिललितम् ।
कलयतु सुखमिह राघवचरितम् ॥ ८ ॥

स्निग्धे साध्वि रघूत्तमे वह रतिं युक्ताधिपत्ये धृत-[1]
क्लेशे सर्वजगन्मुदेऽतिरमणीत्याभाष्य सीतां ततः ।
श्रीरामे विससर्ज सोऽपि विपिने हत्वा विराधं ततो
योगीन्द्रैर्निषसाद सादरभरं श्रीगौतमीतीरतः ॥ २ ॥

इति शितिकण्ठकविकृतौ श्रीगीर्वसीनावल्लभे महाकाव्ये गौतमीतीरनिवासो नाम नवमः सर्गः ।

1. (क) भृतः ।

## दशमः सर्गः

अत्रान्तरे कृतनदीतटपर्णशालं
राम वसन्तमिव मूर्त्तिधरं वसन्तम् ।
कान्तानुजप्रमुदितं मिलिता स्मरान्धा
कान्तारतः सपदि सूर्पणखा[1] जगाद ॥ १ ॥

### ऊनविंशः प्रबन्धः

देशवराडीरागेण गीयते

युवतिततिलोलमतिमीनहरणे स्वयं कुशलतरमलघुशोभम् ।
कुटिलनयनान्तवडिशं विलसितामिषं वहसि वत जनितगुरुलोभम् ॥
अये कामकान्ते कथयाशु विपिनान्ते
वसति किमनाकुलं शमय हृदयानलं
कान्त भज भजनरसिकान्ते ॥ ध्रुवपदमिदम् ॥ १ ॥

सत्वरं वीरवर वितर मम जीवनं तूर्णं परिशमितगुरुखेदम् ।
स्वतनुरियमुत्तमां सजलजलदोपमां तेन ते वहतु गतभेदम् ॥ २ ॥

त्वमसि रतिनायकः करकलितसायकः स्वमगमपि कलयसि कलत्रम् ।
चरणपतनेन वनमवनितलमण्डनं रम्य किमु रचयसि पवित्रम् ॥ ३ ॥

विबुधभिषजौ युवां प्रथमजननो भवानोषधिचयघटितयोगम् ।
मृगयसि वने भजसि किमु विपिनदेवतां हृद्य हर चित्तभवरोगम् ॥ ४ ॥

नीलनलिनीदलजालघटितं ध्रुवं धीर कलयामि तव रूपम् ।
सकलनयनालिरिदमेति सरसं स्फुटं तेन परमेतदनुरूपम् ॥ ५ ॥

वदनविधुनिःसृतं दशनवसनार्पितं गलितमधुधीरतरधारम् ।
स्मितममृतमीषदनिमेषपुरदुर्लभं न जनयति न लोभमपारम् ॥ ६ ॥

---

1. (क) शूर्पणखा ।

इतरजनसारसं सपदि मम मानसं मुक्तगुरुसाध्वसमलज्जम् ।
कलयति बलादहो स्वतनुविलसन्महो युवतिजनधैर्य्यहृतिसज्जम् ॥ ७ ॥

इति कपटचारुदशकण्ठदनुजानुजाभाषितं रघुतिलकगीतम् ।
कलुषमुद्भाषितं हरतु शितिकण्ठकविकल्पितं श्रवणपुटपीतम् ॥ ८ ॥

परिहर धृतातङ्कां शङ्कां परेवमितीदृशीं
कलय विगलत्पङ्कां लङ्कापतेरनुजां निजाम् ।
रुचिरसुचिरं शोभां लोभाङ्गगां कमुदीदयते
वहति भवत्सङ्गासङ्गे रतिं महतीं मतिः ॥ २ ॥

व्यथितहृदयां वामां कामाशुगैः प्रसमीक्ष्य तां
जनकतनयां कोपाटोपाकुलां च रघूद्वहः ।
अथ स विततकूतख्यातेरितैरनुजान्तिकं
स्मितसहचरैः सप्रेमां प्रेषयत्परिवञ्चिताम् ॥ ३ ॥

मुग्धा वचो रघुपतेस्तदवेत्य सत्य-
मत्युत्सुकेत्य सविधं शुभलक्षणस्य ।
सा लक्ष्मणस्य[1] कपटोक्तिवशान्निराशा
वेगादगाज्जनकजां द्रुतमस्तुकामा ॥ ४ ॥

बन्धूकद्युतिबान्धवेन सहसा कृत्तेन रामाज्ञया
वीरश्रीधरलक्ष्मणेन शिशुनाप्युच्चैस्तरां पातिताम् ।
तां घ्राणश्रवणेन वीक्ष्य मिलिता युद्धाय बद्धादराः
संग्रामे खरदूषणप्रभृतयो रामेण सर्वे हताः ॥ ५ ॥

दृशौ भयभराकुले प्रतिदिशं विसृज्याथ सा
दशाननमुपेत्य रोदनयुता चरित्रं रिपोः ।
स्वाह परुषाक्षरं स च निशम्य सीतां ततोऽ-
सुरेण मृगरूपिणा रघुवरं निनायाश्रमात् ॥ ६ ॥

इति शितिकण्ठकविकृतौ श्रीगीतसीतावल्लभे महाकाव्ये [मायामृगसमागमो]
नाम दशमः सर्गः ।

---

1. (क) लक्षणस्य ।

## एकादशः सर्गः

सुचिरमथ कुरङ्गे पाहि मां लक्ष्मणेति
स्वमिव लपति जाते लक्ष्मणे वाक्शरास्ते ।
नयति निजकलत्रं रावणे पर्णशालां
व्यलपदलघुशून्यां वीक्ष्य मारीचहन्ता ॥ १ ॥

### त्रिंशः प्रबन्धः

वसन्तरागेण गीयते

विरचितकुञ्जकुहरमिहिरावलिहारिमहस्तव गात्रम् ।
सम्प्रति नेत्रपथं मम नाथति केलिकुतुकरसपात्रम् ॥
सीते त्यज त्यज कपट मम भयमपनय कोपने ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

मदतिविलम्बविजम्भणसम्भृतसम्भ्रमरोषविशेषम् ।
व्यथयसि किमिमं कुत्र निलीय विकम्पितदोषमदोषम् ॥ २ ॥

शृणु मधुरं मधुपावलिरालिवदुत्स्वरमुपदिशतीयम् ।
कपटमनागसि मुञ्च मनागिति वद सदयं कमनीयम् ॥ ३ ॥

गुणमयि गुणमयि तृणयसि किं मयि कान्तलतान्तरिताङ्गम् ।
संवृणु नय सुमङ्गिनपल्लव भङ्गिकराङ्गि सरागम् ॥ ४ ॥

कुसुमितकाञ्चनसञ्चयसंकृतगात्रमकलितविशेषम् ।
नेत्रयुग तव भृङ्गरुचिं वहति हन्त मम भ्रमदोषम् ॥ ५ ॥

माधवमति विपिनमेतदियं ननु मम पुर उपहसितपृष्ठम् ।
कौशिकमापिकृतचामरबालधिविभ्रममिदमिह दृष्टम् ॥ ६ ॥

स्मर मम भजनमुपेहि निधेहि मदङ्क उरस्यपि कायम् ।
मृदुवचनं रचयाशु न यास्यति चिरमपि तव वचसायम् ॥ ७ ॥

शशितिकण्ठभणितमिदमुत्सुकरघुकुलहीरविलापम् ।
कलिकलुषापहमिह कवयो भुवि कलयत कण्ठकलापम्[1] ॥ ८ ॥

सा मां चित्रकुरङ्गसङ्गविलसत्पाणिं विलोक्यादरा-
द्दूरादाशु समेत्य यास्यति रतिं ध्यात्वेतिवेगादगाम् ।
मायावीसहितः प्रिये मृगतनुर्मारीचरात्रिचरः
कोपोंगोपनसूचितः किमुचितः द्राक्दर्शनं[2] देहि मे ॥ २ ॥

अक्ष्णोस्त्वं हृततारका[3] ध्रुवमतः पश्यामि न त्वां विना
किञ्चिद्विश्वमिदं तमिस्रनिचयालिप्तं समुद्योतते ।
तत्ते तारकिते[4] विधेहि सहसेत्येव विलप्याधिकं
रामस्तत्परिमार्गणार्थमटवीं भ्रात्रा सह प्रविशत् ॥ ३ ॥

कश्मीरगौरवपुष मृगयन् जटायु
र्दाहं विधाय तदुदीरितजातहर्षः ।
हत्वा कबन्धमलघुं श्रमणोक्तमार्गो
पम्पामुदीक्ष्य विमलां विललाप रामः ॥ ४ ॥

हारादि वोदय विमलं दयिताङ्गसङ्गं
सुग्रीवतः सपदि तेन विधाय सख्यम् ।
द्राग्वालिनं च दलयन् सुखयन् सहायं
रामः प्रवर्षणगिरौ विललाप तीव्रम् ॥ ५ ॥

---

1. (क) (ख) अष्टमपदस्योल्लेखो नास्ति ।
2. (क) (ख) (ग) श्राक् दर्शनं ।
3. (क) तरका ।
4. (क) तारविते ।
   (ख) तारवते ।

## एकविंशः प्रबन्धः

### वराड़ीरागेण गीयते

श्रितवनवातगतिजातकदने । व्रजतु सीते वारिददिने ॥
क्षणोऽपि कथमिह कथय कमलवदने ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

जनितमदभेककुलकलितनादे । व्रजतु सीते वारिददिने ॥
क्षणोऽपि कथमिह कथय हृतविषादे ॥ २ ॥

हृदयहरमधुररुतकेकिलास्ये । व्रजतु सीते वारिददिने ।
क्षणोऽपि कथमिह कथय चारुहास्ये ॥ ३ ॥

अविरतनिपतितनवसलिलधारे । व्रजतु सीते वारिददिने ।
क्षणोऽपि कथमिह कथय रुचिरहारे ॥ ४ ॥

घनरसविलसितसरिदुदितभङ्गे । व्रजतु सीते वारिददिने ।
क्षणोऽपि कथमिह कथय लसदनङ्गे ॥ ५ ॥

प्रवलचपलालिरुचिघोरगगने । व्रजतु सीते वारिददिने ॥
क्षणोऽपि कथमिह कथय कुन्दरदने[1] ॥ ६ ॥

स्तनितमिलदशनिरवसभयभुवने । व्रजतु सीते वारिददिने ।
क्षणोऽपि कथमिह[2] कथय लसितभवने ॥ ७ ॥

विरचितपार्वतीशपदसपर्ये[3] । हर खरारे पातकशतानि ॥
भणति शितिकण्ठकविकर्मधुर्ये ॥ ८ ॥

त्वां शोभाजितचञ्चलां कलयतः शम्पाद्य कम्पाय मे
त्वत्केशच्छुरितजनादिव घना गर्जन्ति घोरं घनाः ।
उत्पिच्छाः निजबान्धवा इव जवात्केकाकराः केकिनः
सीतेऽस्यां रहितस्त्वया इहकथं नेष्याम्यहं प्रावृषि ॥ ६ ॥

---

1. (क) कुन्दरचने ।
2. (क) इह ।
3. (क) (ख) सपर्गे ।

सामर्षलक्ष्मणगिरा हठात्कपिभटावृतः ।
सुग्रीवोऽथ शरत्काले प्रविवेश प्रवर्षणम् ॥ ७ ॥

## द्वात्रिंशः प्रबन्धः

### वराडीरागेण गीयते

सीतावदनविचिन्तनविरहविजृम्भितपाण्डुरभावम् ।
मिहिरदुहितुरुदकं बहुगाङ्गजलमिलितमिव धृतभावम् ॥
रघुवीरवरं स कलितमदनविकारम् ।
तं ददर्श गतहर्षमुखाम्बुजमपि वपुषा जितमारम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

वाष्पनिकरसततास्पदमुकुलितलोचनयुग्ममनिन्द्यम् ।
विदधदम्बुपुरीभवदम्बुजदलयुगलद्युतिबिन्द्यम् ॥ २ ॥

श्वासपवनमधिकोष्णमवारितमलघुनमं कलयन्तम् ।
इन्द्रियसमुदयकल्पभवानलमिव मदनानलवन्तम् ॥ ३ ॥

अचलकलेवरमनिशनिमीलितलोचनमनुदितहासम् ।
स्थिररविजाजल[1]पूरमिवोज्झित गलितकुमुदवनभासम् ॥ ४ ॥

विलुलितललितकलेवरगण्डलकलितचिरान्तरदाहम् ।
रुपमिव सुहृदि वहन्तमुरक्तृतचञ्चलमिव जलवाहम् ॥ ५ ॥

परमरतिं निवहन्तमसमशरमात्मभुवं रमयन्तम् ।
मकरध्वजमिव चापधरं मधुकरमपि कलयन्तम् ॥ ६ ॥

मुनिमिव मननरतं विगतप्रियमब्धिमिवातनुमङ्गम् ।
शरदि जलमिव पाण्डुमचञ्चलमुज्ज्वलरसरहिताङ्गम् ॥ ७ ॥

श्रीशितिकण्ठभणितविरहानलपीतरसाधिकतान्तम् ।
कलयति हृदि कृतिनो रघुनन्दनमाशुधराम्बुजकान्तम् ॥ ८ ॥

---

1. (क) (ख) रविजाजा ।

म्लानिक्षामं रामं रहसि विरहाद्वीक्ष्य विरसं
धृताधिः सुग्रीवो ललितरचनैः सान्त्ववचनैः ।
सुखाकुर्वन्नुर्वीवलयनिलयामङ्गदमुखान्
दिदेश द्रागुर्वीदुहितरमनिन्द्यां मृगयितुम् ॥ ८ ॥

भजन्त शैलेन्द्रानथ दशदिशस्ते कपिपतेः
समादेशात्कीशाहृतगमनदेशा विदधिरे ।
मरुत्सूनोः पाणौ नवविरहदूनोऽङ्गुलिगतां
समर्प्यद्राङ्मुद्रामुदमुदवहद्रावणरिपुः ॥ ९ ॥

इति शितिकण्ठकविकृतौ श्रीगीतसीतवल्लभे महाकाव्ये [सीतान्वेषणं]
नामैकादशः सर्गः

## द्वादशः सर्गः

गतवति दिशः कीशव्यूहे नलाङ्गदजाम्बव-
त्कुमुदशरभैर्मैन्दैश्चान्यैर्विलसद्दलीमुखैः ।
पवनतनयः सम्पात्युक्तं विलङ्घ्य पयोनिधिं
दशमुखसुखाक्रीडे सीतां समीक्ष्य जगाद ताम् ॥ १ ॥

### त्रयोविंशः प्रबन्धः

विभासरागेण गीयते

विरचितकपिपतिसख्यमुरीकृततदभिलषितसुखभारम् ।
बलिवरवालिवधाखिलवर्णितनिजभुजयुगभृतसारम् ॥
भृतकुशलं श्रीराघवं कलय सबलमवनीसुते ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

दवभवदुज्झितभूषणगणसमुदीक्षणपरिचितदर्पम् ।
नवविरहानलहेतिभयात्कलयन्तं दिनमपि वर्षम् ॥ २ ॥

अनधिगतत्वदुदन्तसमुन्नतसेतुनिरुद्धबलौघम् ।
सकलहरित्परिमार्गणनिर्गतहरिसमजवहरिसङ्घम् ॥ ३ ॥

पवनसुते कपिपतिसचिवे मयि विनिहितनिजकरमुद्रम्
यद्वहनादहमपि तरसातरमतितरभीमसमुद्रम् ॥ ४ ॥

मत्समसमधिकतरवरवानरनिकरकरार्चितपादम् ।
वनमृगवाहुजबहुविधभाषितविदलितविपुलविषादम् ॥ ५ ॥

त्वं नवनीततनुरुज्झसि न तदवनीतनया त्वम् ।
नवनीतल इह सुलभेत्यपि बहुविलपनविमतत्वम् ॥ ६ ॥

भूषणमतिरमणीयमिदं नय सेवितपतिकरशाखम् ।
प्रेषय धवमविधं सविधं निजवाचिकमपि कृतलेखम् ॥ ७ ॥

श्रीशितिकण्ठभणितकलितविनयपत्रनतनयनयवाक्यम् ।
रघुपतिपदमनसां दुरितं द्यतु यत्परिहर्त्तुमशक्यम् ॥ ८ ॥

प्रत्यूहं प्रियदर्शनेन कलय क्षेमा स नेष्यत्परं
त्वामित्थं समुदीर्य तन्मतिवरं लब्ध्वा च तद्वाचिकम् ।
सात्राजित्त्वमराक्षसक्षयमयं कृत्वा पुरीं भस्मसा-
त्साक्षात्पक्षधराद्रिवत्कपिभटैः सिन्धुं ततार क्षणात् ॥ २ ॥

दोर्भ्यां बालिसुतादिवानरभटैर्वात्ताश्रुतेर्वायुजो
वारं वारमवार्यवीर्यविभवाश्चर्यात्समालिङ्गितः ।
क्षौद्रं क्षुद्रकराक्षिविद्रुतिकरः पीत्वा समेत्याखिलैः
सीतादत्तशिरोमणेर्वितरणाद्रामं समप्रीणयत् ॥ ३ ॥

मारश्रीजयपारगद्युतिरथ श्रीराघवो वानरैः
साकं सिन्धुतटं समेत्य स रिपोर्भ्रात्रा समेतस्ततः ।
पाथोधौ स्थलतांगते निजधनुष्टङ्कारभीतेः क्षणा-
द्वाहिन्या नलसेतुना समतरत्तं दुस्तरं लीलया ॥ ४ ॥

तस्या दस्युपदस्थितेः स कुपितः प्राणप्रियाया रणे
तत्तद्वानरपुङ्गवैरजनयत्तत्त द्रुपक्षक्षयम् ।
याते याम्यपुरं पुरन्दरजिति प्राक्लक्ष्मणस्याशुगै-
स्तत्तं पुत्रकपौत्रदष्टमकरोद्गन्तुं परत्र स्वयम् ॥ ५ ॥

अथ कान्तां शिरस्कान्तां वृहद्भानुपरीक्षिताम् ।
जगाद पुष्पकारूढः समखः स पुरीं व्रजन् । ६ ॥

## चतुर्विंशः प्रबन्धः

### रामकिरीरागेण गीयते

कलय कलावति भिन्नरजनीचरशोणितशोणरणाङ्गम् ।
विपुलशवप्लवसञ्चयधावितवञ्चकविकलपतद्गणम् ॥
स जगाद तमविनिन्दिताम् । रावणनिधननन्दिताम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

दशशिरसं सुरसंस्मरसञ्चयसङ्कटसन्ततमादरम् ।
अहह विलोकय लोहितलोलुपगृध्रकुलस्फुटितोदरम् ॥ २ ॥

मतिमतिकायनिरीक्षणकातरताकुलितां कुरु नाबले ।
इममवधारय मारुतसंकुल इह चलमिव वसुधातले ॥ ३ ॥

युधि कृतिनं शरसर्पकृतनिविड़बन्धनमिन्द्रजितं क्षणम् ।
कलय विपाम्तिलक्ष्मणमार्गणपीतरुधिरमचलेक्षणम् ॥ ४ ॥

इह मयशक्तिकृताखिलशक्तिकमसुविरहितमिव लक्ष्मणम् ।
पवनसुत समजीवयदाहृतगिरिरुदितौषधिभक्षणम् ॥ ५ ॥

इह निहितं घटकर्णपुरःसररजनीचरव्रजमुन्नतम् ।
जलधिममुं च निभालय भाविनि सेतुमिमं नलनिर्मितम् ॥ ६ ॥

मलयगिरिं च विलोकय वानरराजपुरीं जनमेदिनीम् ।
प्रथमनिवासधरं नगरीं च ततं परमाध्वसभेदिनीम् ॥ ७ ॥

श्रीशितिकण्ठभणितरघुनन्दनगीतमिदं जगतां प्रियम् ।
श्रवणकृतां पठतामपि कामपि संस्मरणं कुरुतां श्रियम् ॥ ८ ॥

रचय विफलं चक्षू रक्षःस्तुतौ सरितांपतौ
परपुरगतौ हेतौ सेतौ पुरश्च सुहृत्पुरे ।
कलय विगलत्पापां पम्पां जनक्षितिमीक्षतां
स्फटिकविशदाम्भोदां गोदावरीं गुरुमाधुरीम् ॥ ७ ॥

यो गान्धर्वकलाप्रिये परिचितः श्रीचित्रकूटाचलः
सोऽयं पश्य नमस्कुरु प्रियतमे सूर्यात्मजां जाह्नवीम् ।
इत्थं तामथ दर्शयन्निजपुरीं प्राप्याभिषिक्तः क्षितौ
क्षोणीं कालमपालयद्बहुतमं स्वर्गं यथाखण्डलः ॥ ८ ॥

क्षौद्र क्षुद्रं समुद्रं प्रविश विषसहावासपीयूषखण्डाः
पाण्डित्यं खण्डितं वो हृदि वह सहसा क्षोभमक्षीणमिक्षो ।
चूत स्वान्तः कषायं कषतु तव रसं गोपयो गोपयाद्भिः
क्षारं पीताम्बरस्यात्मजवचनमिदं यावदस्तीह शस्तम् ॥ ६ ॥

श्रीगीतगोविन्दथानुसाराद् जनार्द्दनक्षोणिपतेर्नियोगात् ।
पौलस्त्यविद्वेषिचरित्रचित्रं श्रीनीलकण्ठस्तदिदं चकार ॥ १० ॥

इति शितिकण्ठकविकृतौ श्रीगीतसीतावल्लभे महाकाव्ये [श्रीरामाभिषेको] नाम द्वादशः सर्गः ।

# परिशिष्टम्

(क) अन्वयार्थप्रकाशिनीटीकाकारस्य परिचयः—

नेत्रत्रयाकलितमिन्दुकलावतंसं
गौराभमत्तरवपुर्विकचाब्जसंस्थम् ।
ईश महः किमपि तत्सकलार्थसिद्ध्यै
वाचांगणस्य सततं शरणं व्रजामः ॥ १ ॥

स जयति भुवननिवासो भगवान् लक्ष्मीविलासभूयस्य ।
उत्पद्य नाभिपद्मान्मरीचिमुख्यान् ससर्ज तान् ब्रह्मा ॥ २ ॥

ततो मरीचेः किल कश्यपाख्यो
मुनिः कलागर्भसमुद्भवोऽभूत् ।
इमाः प्रजा योऽदितिमुख्यकानां
दाक्षायणीनामुदरेष्वसूत ॥ ३ ॥

तस्मात्ते मुनयः क्रमात्समभवन्येकाश्यपानि ध्रुवोऽ-
वत्सारोऽपि च काश्यपः प्रवरतां प्राप्तास्तया व्युत्क्रमात् ।
आसीद्वंशधरः स कश्यपमुनेर्गोत्रोद्भवः काश्यपो
यस्मात्काश्यपगोत्रिणः क्षितितले ते कोटिशो ब्राह्मणाः ॥ ४ ॥

आसीत्कश्चित्तेषु नन्दोपनामा
नन्दाख्यं तं केचिदाङ्पूर्वमाहुः ।
साम्नां गीतैर्नन्दयन् लोकजातं
जातः ख्यातिं यः क्षितौ कौथुमीयः ॥ ५ ॥

तदीयकुलजाः क्रमानुगतनन्दनामाङ्किताः
श्रुतिस्मृतिसदागमाद्यखिलशास्त्रपारंगताः ।
सदाचरणशालिनो नृपकुलेषु सम्मानिनः
तथोत्कलमहीतलं सकलमप्यलंचक्रिरे ॥ ६ ॥

तस्मिन्वंशपयोनिधौ समुद्भूत्संपूर्णचन्द्रोपमो
नन्दोपाह्वयवन्दितो द्विजवरो दामोदरायः सुधीः ।
क्षेत्रे श्रीपुरुषोत्तमे सुकृतिनां धाम्नि प्रधाने पुरो
यो वासं कृतवान् सुशासनवरे विद्याधरार्ये पुरे ॥ ७ ॥

लक्ष्मीगर्भसमुद्भवोऽस्य तनयः श्रीदिव्यसिंहाह्वयः
देव्याराधनलब्धसिद्धिविभवो यो भूतलं पर्य्यटन् ।
प्राप्तो नन्दपुरेऽत्र वन्दितयशाः सर्वज्ञताद्यैर्गुण-
ग्रामैर्ग्रामगणं विविन्द विदधन् दुर्गोत्सवाद्याः क्रियाः ॥ ८ ॥

शास्तायां जनयांबभूव समुतौ तौ धर्मपत्न्यां क्रमाद्
ज्यायांस्तत्र विनायको विनयधीनैपुण्यपुण्यार्जकः ।
नो दीनो ननु दीनबन्धुरपरो मल्लः पटुर्भोजने
यो लाजादधिभोजनार्थममितां भूमिं नृपाल्लब्धवान् ॥ ९ ॥

गङ्गाम्भःपरिशुद्धबुद्धिरमुतो गङ्गाधराख्योऽभवमा-
ज्जातोऽस्मान्नरसिंह एष हि सदोन्मत्तः शिवाराधने ।
देवीदत्त इतोऽप्यभूद्धरिहराभिख्योऽस्तिमान्यः सतां
यः साहित्यविशारदेति पदभागुक्ताः प्रसङ्गादमी ॥ १० ॥

तावागत्य कुटुम्बिनौ जयपुराधीशेन सम्मानितौ
वृत्तिंभूमिधनादिकामिह चिरं लब्धौ सुखेनोषतुः ।
यद्वंशानुजनुर्भृतः क्षितिभृतां तत्पूरुषानुक्रमाद्
विद्यन्ते सह दानमाननिकरैरद्यापि संपूजिता ॥ ११ ॥

त्रीन् पुत्रान् स विनायकोऽम्बजनयत्त्रेनानिभानप्सरो
देव्यां तेषु गृहामेऽपि मुनिवत्सर्वेश्वराख्योऽग्रजः ।
नाम्ना न्यस्तमहेश्वरोऽतिमतिमान् कार्य्यक्षमो मध्यमः
ख्यातोऽभूत्पुरुषोत्तमश्चरमजो धीरो द्विजेषूत्तमः ॥ १२ ॥

सत्कर्मादिरतो नृपाद्यभिमतकैलासकूटाभिधे
यः शाखानगरे सशासनभुवं ग्रामात्मकं लब्धवान् ।
तस्माच्छ्रीपुरुषोत्तमो समभवन् पुत्रास्त्रयो रेवती
देव्यां भव्यगुणैस्त्रिमूर्त्तय इव सेव्याः समस्तैरपि ॥ १३ ॥

तत्राख्यायतचन्द्रशेखर इति ज्येष्ठो वरिष्ठः सतां
तत्पश्चाज्जनिमान् जयाभिध सुधीः निःसन्ततिर्यो मृतः ।
अन्त्यः फक्किरनन्द इत्यभिहितो यः पट्टजोषेत्यपि
ख्यातो यस्य सुतास्तुता हरिहर श्रीरायगुर्वादयः ॥ १४ ॥

शुद्धेनाप्यथ चन्द्रशेखरसमुत्सृष्टेन तत्तेजसा
सिन्धो गर्भकटाहमध्यकलितो मुक्ताख्यदेव्याः भृशम् ।
यः प्राक्सञ्चितपुण्यसञ्चयपरीपाकः समुद्भासितः
सोऽयं श्रीप्रहराजनन्दपदभाक् श्रीमाधवाख्योऽभवत् ॥ १५ ॥

यो गङ्गायमुनाप्रधानहिमवत्पादस्थतीर्थोदकैः
सन्तर्प्यात्मपितॄन् समर्च्य बदरीकेदारनाथादिकान् ।
सेतौ संस्थितरामनाथमभिषेच्याथ स्वहस्तेन च
स्वार्थं साधितवान् परिभ्रमणतो भूमेः सभार्य्यः स्वयम् ॥ १६ ॥

विद्यावित्तकुटुम्बरूपगुणधी सद्धर्मकर्मादिभिः
साधीयान् समुदाहरन्ति सुधियोऽप्यन्यत्र यत्कुत्रचित् ।
तस्मात्केवलमाधवप्रतिनिधेः श्रीमाधवात्साधव-
श्चत्वारो जनिता सुतागणमणिदेव्यां समायां श्रिया ॥ १७ ॥

ज्येष्ठस्तगरिष्ठसद्‌गुणयुतो देवद्विजाराधन-
श्रद्धानुविविधक्रियासुचतुरो दामोदराख्योऽभवत् ।
अन्यो वैद्यकसारसंग्रहमुखग्रन्थप्रणेता महा-
पात्रेति प्रथितः स्वमातृकुलभृच्छ्रीवैद्यनाथः सुधीः ॥ १८ ॥

श्रीमातापितृपादपालितवपुस्ताभ्यां च संलालितः
भ्रातृभ्यां नरसिंह नाम चरमभ्राता च ससेवितः ।
विद्यामाद्यतमां प्रसाद्य सुमहोपाध्यायनाम्नाङ्कितं
विभूषण इत्युपाधिमगमद्योऽसौ तृतीयात्मजः ॥ १९ ॥

न्यायव्याकरणैकदेशनिपुणो वेदान्तसिद्धान्तवि-
ज्ज्योतिर्नीतिससांख्ययोगमतिमान् साहित्यतन्त्रश्रमी ।
श्रौतस्मार्त्तकथायथार्थकथकः सभ्यः सतां सेवकः
सोऽहं नन्दकुलोद्भवो द्विजवरः श्रीरामनाथकविः ॥ २० ॥

सट्टीकं विरचय्य काव्यनिचयं श्रीसूर्य्यवंशावली
प्रेष्ठं श्रीशितिकण्ठनामसुकवेः कुर्वे वचोऽर्थैःस्फुटम् ।
श्रीमद्रामचरितचित्रितकथागीतिश्रुतिप्रीतिम-
च्चित्तानां कृतिनां नितान्तमयमारम्भः शुभायास्तु नः ॥ २१ ॥

ख) कविपरिचयः—

अस्त्युत्कले क्षितितले शरदुर्गनाम्नी-
गङ्गामपुञ्जितपुरीषु सुराजधानी ।
विप्राग्रगोऽत्र हरिकृष्णपुराग्रहारे
प्राभूत्त्रिपाठिकुलमौलिरनामनामा ॥ १ ॥

तस्माद्ब्रह्मसमात्मनः समभवद्गोपालनामा सुधीः
सीतागर्भमुखोदितः प्रथमतो यो ब्रह्मबीजात्मना ।
चत्वारस्तनुजास्ततः समभवन्यान्वेदमूर्त्तीन् मणी-
देवी संजनयन्त्यगाद्तितरां तां वेदमातुः श्रियम् ॥ २ ॥

तत्त्वख्यायतनामतोऽमितगुणः पीताम्बरः पूर्वज-
स्तत्पश्चाज्जनिमान्विनायक इतः श्रीगोपीनाथस्ततः ।
तस्माद्प्यनुदीनबन्धुरिति ते सर्वेऽपि पूर्वाश्रितैः
शिष्टानुष्ठितधर्मकर्मसमनुष्ठानैर्विशिष्टा मताः ॥ ३ ॥

वेदानामिह सामवेद इव यो वर्यः स पीताम्बरः
षट्पुत्रान् सुषुवे षडङ्गसुभगान्गुम्फेयगर्भस्फुटान् ।
ज्ञानोपासनकर्मकाण्डविलसच्छ्रीसोदरीभिर्भृशं
सोदर्य्याभिरपाश्रिता निखिलसच्छास्त्रैः प्रशस्तिं गतान् ॥ ४ ॥

आद्यः श्रीधर इत्यगद्यतपरस्त्वानन्द नामा प्रति-
ष्ठाऽलंकारपदप्रतिष्ठिततमः श्रीनीलकण्ठोऽपर ।
अन्यस्तत्र दिवाकरोऽप्यथ महादेवाह्वयः पञ्चमः
साहित्यादिकभूषणोपपदभाक् गोविन्दनामान्तिमः ॥ ५ ॥

लक्ष्मीलक्षणलक्षिता प्रथमजा तस्मात्तदाख्याङ्किता
तत्रान्याखिलसत्क्रिया निरलसा तच्चञ्चलेति स्मृता ।
श्रद्धा नाम कनीयसी समगमद्या सर्वहार्दाश्रया
सर्वास्ता सुभगा परस्परगुणोत्कर्षे भगिन्यः समाः ॥ ६ ॥

योऽसौ मागमपुङ्गवः कविवर सावर्ण्यगोत्रोत्तमः
साहित्यामरयौमरादिविविधव्याहारपारङ्गमः ।
तेष्वासीच्छितिकण्ठ इत्यभिहितो नक्षत्रनाम्ना महा-
देवाख्येऽपि स वेदभूषणपदोपेतश्च वेदार्थवित् ॥ ७ ॥

उत्पन्नावमुतोऽपि वेदवदनाच्छब्दार्थवर्त्मस्मृतौ
श्रीहर्षः प्रथमः प्रफुल्लपदभाक् नाम्ना कुमारेऽपरः ।
पुत्र्यः सप्त सरस्वतीप्रभृतयश्चोमा सुरेखाऽप्सरा-
सूया नादिरिमा विभक्तय इवापर्णा च हारामणिः ॥ ८ ॥

सोऽयं तैस्तनुजादिभिः सहसुखी वृत्ते ष्टपुत्रादिकृ-
त्स्वेष्टं साधयितुं प्रजप्य विधिवद्यावच्च पश्चावृतौ ।
लब्धं तन्मितरामतारकमहामन्त्रं ततो गीतयुक्
सीतावल्लभकाव्यमेतदकरोच्छ्रीगीतगोबिन्दवत् ॥ ९ ॥

लक्ष्म्याख्यां सहधर्मिणीमथ तयोः सूनोर्निवेश्यान्तिके
सोऽन्ते सोऽस्य वयस्यशेषविषयत्यागादगाङ्ख्रिक्षुताम् ।
छिन्नं भिन्नमभूत्ततोऽतुलमिदं काव्यं हि कालक्रमा-
त्स्खलज्ञैः क्वचिदन्यथा प्रतिलिपौ भावानिबोधाकृतम् ॥ १० ॥

गच्छत्स्वेवमथो दिनेषुकतिषु श्रीवैद्यनाथः सुधीः
योऽयं केन्दुझरेऽम्बरे द्विजवरः प्रादुर्भवन्निन्दुवत् ।
प्रख्यातः प्रहराजसंयुतमहापात्रोपनाम्नाङ्कितः
सर्वत्रोत्कलशर्मसाधनविधौ सत्कर्मदीक्षागुरुः ॥ ११ ॥

सोऽयं भव्यमिदं हि काव्यमितरैर्दुर्भाव्यमाभाव्य त-
त्सामान्यैरिति संविलिख्य मतिमान् प्राप्य स्वयं यत्नतः ।
व्याख्यातुं प्रविशोध्य सर्वसुविदे मेऽज्ञातपूर्वोऽपि मां
ज्ञात्वा प्रेषितवान्मदन्तिकमदः प्रेमोपहारैः सह ।। १२ ।।

तत्संलभ्य ततो मया जयपुराधीशस्य सभ्यास्पदं
यातेनात्र निजात्मजस्य सुधियो विश्वम्भरस्याग्रहात् ।
संशोध्यापि यथामति द्विजवरश्रीरामनाथेन तद्
व्याख्यानं कृतमस्त्विदं भगवतः सीतापतेः प्रीतये ।। १३ ।।

शरर्त्तुवसुभूमाने शके माघे शितेतरे ।
दशम्यां गीष्पतौ व्याख्या ग्रन्थोऽयं पूर्णतां गतः ।। १४ ।।



# प्रबन्धानामनुक्रमणिका

## रागनामानुक्रमणिका

## श्लोकानुक्रमणिका

—*—

# ॥ शुद्धिपत्रम् ॥

| पत्रम् | पंक्ति: | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ५ | लोंयिते | लौंयते |
| | १३ | लसदलङ्कृतिमञ्ज | लसदलंकृतिमंजु |
| ३ | १७ | पदमुभिजत | पदमुज्झित |
| ८ | १४ | घुम | घूम |
| १० | ६ | गण्ढयुगा | गण्डयुगा |
| ११ | ६ | तद्वाणों | तद्वाणीं |
| | ७ | श्रिीशितिकण्ठ | श्रीशितिकण्ठ |
| १३ | ५ | विपिमं | त्रिपिनं |
| १६ | ४ | निजरुष | निजरूप |
| | २० | साधमखिल | सार्द्धमखिलं |
| २० | १४ | मरस | विरस |
| | १७ | मनास | मनसि |
| | २१ | पारत्यज्यताम् | परित्यज्यताम् |
| २१ | ४ | नितन्तं | नितान्तं |
| २२ | ३ | सुमनाभरैः | सुमनोभरैः |
| | ४ | रचयधुना | रचयाधुना |
| | ६ | कण्ठे प्रियस्य | कण्ठे कण्ठे प्रियस्य |
| २४ | २,६ | दशय | दर्शय |
| २५ | ६ | सरुष | सरुषि |
| | १७ | फुरु | कुरु |
| | १६ | हस दिव | हसदिव |
| २६ | १४ | मोहाणव | मोहार्णव |
| २७ | ७ | कवेरतमधुरिम् | कवेरतिमधुरम् |
| | | भवगीमतिमधुरम | भवभीमतिमधुरम् |
| २८ | १८ | तमुपेत्याह | तामुपेत्याह |
| ३० | ४ | करुणापाङ्गे नाङ्गा | करुणापाङ्गे नाङ्गी |

| | | | |
|---|---|---|---|
| | ७ | म्वाकृत्य | स्वीकृत्य |
| ३१ | १७ | विगलद्वारितवर्षम | विगलद्वारितवर्षम् |
| ३२ | ८ | नन्दाग्राम | नन्दीग्रामं |
| | २० | प्रभृतयी | प्रभृतयो |
| ३७ | ८ | महृरतव | महृस्तव |
| | १० | अधवसती | अधिवसति |
| ३८ | ६ | पस्यामि | पश्यामि |
| | १२ | प्रविशत् | प्राविशत् |
| | १३ | जटायुदाह | जटायुर्दाहं |
| | २० | प्रवषण | प्रवर्षण |
| ३९ | ४ | घणऽपि | घणोऽपि |
| ४३ | १६ | त्तत्तद्पद्म | त्तत्तद्विपद्म |
| ४४ | १० | निमालय | निभालय |
| | १५ | गोपयाद्भिः | गोपयद्भिः |
| | २३ | वचनामदं | वचनमिदं |
| ४५ | १ | गोविन्दथानुसाराद् | गोविन्दपथानुसाराद् |
| | | जनाद्न | जनार्दन |

————